# अनुक्रमणिका

## ।। अथ गोप्रसव शांति ।।

**आचम्य देशकाल संकीर्त्य ।।**

**मम अस्य बालकस्य अमुक दुष्ट कालोत्पत्ति सूचित सर्वारिष्ट निवृत्तिद्वारा श्री परमेश्वर प्रीत्यर्थं गर्गोक्तां गोमुख प्रसवशांतिं करिष्ये ।। तत्रादौ निर्विघ्नता सिद्ध्यर्थं गणपति पूजनपूर्वक कर्मण: पुण्याहवाचन चं करिष्ये ।।**

**गणानांत्वा शौनको गृत्समदोगणपर्तिजगति गणपत्यावाहने विनियोग:।ॐ गणानां त्वा गणपतीं हवामहे कविंकवीनां मुपमश्र वस्तमं । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आन: शृण्वन्नूतिभि: सीदसादनं।। ॐभू:भुव: स्व: श्रीमन्महागणपतये नम: । यथो पचारै: पूजयेत् ।**

**गोमुख प्रसवशांत्यांगभूतं आचार्यवरणं तथा आचार्यकर्म करिष्ये ।। अमुकगोत्रात्पन्नं अमुकशर्मायजमानोहं अमुकप्रवरान्वित अमुकगोत्रोत्पन्नं ऋग्वेदांतर्गत आश्वलायन सूत्रशाकलशाखाध्यायिनअमुकशर्मन्ब्राह्मणंअस्मिन्गोमुखप्रसवाख्यस्य कर्मणि आचार्यंत्वामहंवृणे । वृतोस्मि ।**

**ॐ यदत्रसंस्थितंभूतं स्थानमाश्रित्य सर्वत: । स्थानंत्यक्त्वातुतत्सर्वंयत्रस्थं तत्र गच्छतु । अपक्रामंतुभूतानि पिशाचा सर्वतोदिशम् । सर्वेषांमविरोधेन शांति कर्म समारभे।** (दाही दिशांना पांढऱ्या मोहऱ्या वा अक्षता यजमानाने टाकाव्यात) **इतिगौर सर्षपान विकीर्य।**

**आचम्य । अद्यपूर्वोच्चारीत वर्तमान एवंगुणविशेषण विशिष्टायां शुभपुण्य तिथौ गोप्रसव शांत्यांगभूतं पंचगव्यमेलनंच करिष्ये । गायत्र्या गोमूत्रं ।** (१ पळी ताजे गोमूत्र) **ॐ गंधद्वारा ०। इति गोमयं ।** (अर्धीपळी गोमय) **ॐआप्यायस्व ०। इति पय:।** (३ पळ्या गोदुग्ध.) **ॐ दधिक्राव्णो ०। इति दधि ।** (२पळ्या दही) **ॐ शुक्रमसि ज्योतिरति तेजोसि । इति घृत:।** (१ पळी गायीचेतूप) **ॐदेवस्यत्वा०। इति कुशोदकं ।** (१पळी दर्भाचे पाणी. एकूण पंचगव्य ८।। पळ्या.)**ॐ प्रणवेना आलोड्य । प्रणवेना निरमंथ्य । प्रणवेना अभिमंत्र्य ।।ॐ शुचीवोहव्यामरुत:शुचिनांशुचिहिनोम्यध्वरं**

**शुचिभ्या। ऋतेनसत्य मृतसाप आयन्छुचिजन्मान:शुचय:पावका:। अग्नि:शुचि व्रत तम:शुचिर्विप्र:शुचि:कवि:। शुचीरोचतआहुत:। उदग्नेशुचय:स्तवशुक्राभ्राजंत ईरते । तव ज्योतींष्यर्चय:।। (दाही दिशांना पञ्चगव्याचे प्रोक्षणकरावे.)**

**ॐआपोहिष्ठा मयोभुव०। ३ ऋचा** (कुशोदकाचे प्रोक्षण करावे.)**अपवित्र: पवित्रो वा सर्वावस्थां गतोपिवा। य:स्मरेत्पुंडरिकाक्षं सबाह्यभ्यंतरशुचि:। सर्वंशुचि:।** (यजमानाने हात जोडून उभे रहावे.) **ॐस्वस्त्ययनंतार्क्ष्य मरिष्ट नेमिं महद्भूतं वायसं देवतानां । असुरघ्न मिंद्रसखं समत्सु बृहद्यशोनाव मिवारु हेम। अंहोमुचमांगिर संगयंच स्वस्त्या त्रेय मनसाच तार्क्ष्यं । प्रयतपाणि: शरणं प्रपद्ये स्वस्तिसंबाधेष्व भयंनोऽअस्तु । देवा आयांतु । यातुधाना अपयांतु। विष्णोदेव यजनं रक्षस्व । भूमौ प्रादेशं कुर्यात् ।** तानि कृत्वा गृहस्येशानभागे गोमयेनोपलिप्य श्वेतरजोभि: कर्णिकायुतं पंकजं कृत्वा तत्र व्रीहीन् निक्षिप्य तदुपरिशूर्पं निधाय, शूर्पे रक्तवस्त्रे प्रसारिते तिलविकरणं च कृत्वा प्राङ्मुखम वाक्पादं शिशुं स्थापयित्वा शूर्पेणसह शिशुं सूत्रेण वेष्टयित्वा गो सान्निध्यं कृत्वा ( घराच्या ईशान्य कोपऱ्यांत गायीच्या शेणाने सारवून पांढऱ्या रांगोळीने कमलांतर्गत कोषासह कमळ काढून त्यावर साळ टाकून त्यावर सूप ठेवावे. सूपात लाल वस्त्र पसरून त्यावर तीळ टाकावेत. पूर्वेला तोंड व दक्षिणेला पाय होतील असे बालकांस ठेवावे. सुपासहित बालकाला सुताने गुंडाळून जमल्यास गाईच्या तोंडाजवळ न्यावे. अथवा चांदीच्या गायीच्या मूर्तीवर किंवा सुपारीवर गाईचे आवाहन करून पूजन करावे व पुढील मंत्र म्हणावेत.)

विष्णुर्योनिम् इति सूक्तस्य त्वष्टाविष्णुरनुष्टुप् गोमुख प्रसव भावने विनियोग: ।।

ॐ विष्णुर्योनिंकल्पयतुत्वष्टारूपाणिपिंशतु। असिञ्चतुप्रजापति र्धाता गर्भंदधातुते।।१।।गर्भंधेहिसिनीवालिगर्भंधेहिसरस्वति। गर्भंतेअश्विनौ देवावाधत्तांपुष्करस्त्रजा।।२।।हिरण्ययीअरणीयंनिर्मंथतोअश्विना। तंते गर्भं हवामहेदशमेमासिसूतवे।।३।।विष्णोःश्रेष्ठेनरूपेणास्यांनार्यांगवीन्यां। पुमांसं पुत्रानाधेहिदशमेमासिसूतवे।।४।।

इति सूक्तेन चिंतनं कृत्वा तेनैवा वृत्या पंचगव्येन शिशुं स्नापयेत् ।। **तत: गवामंगेषु तिष्ठन्ति भुवनानि चतुर्दश । यस्मात्तस्माच्छिवंमेस्यादिहलोके परत्रच ।।** इति गो:

सर्वांगेषु वामांगेष्वेव वा स्पृशेत् ॥ (वरील मंत्राने गाईच्या वामांगाला किंवा सर्वांगाला स्पर्श करावा.) तत: आचार्य: विष्णो: श्रेष्ठेन इति मंत्रेण शिशुं गृहीत्वा मात्रे दद्यात् ॥ **विष्णो: श्रेष्ठेनेत्यस्य त्वष्टा विष्णुरनुष्टप् बालादाने विनि०। ॐ** विष्णो॒:श्रेष्ठेन रूपेणा॒स्यां नार्यांगवी॒न्यां । पुमांसं पु॒त्रानाधेहि दश॒मे मासि सूतवे॥ (आचार्यांनी या मंत्राचा जप करीत मुलाला आईजवळ द्यावे.) माता तं बालं आदाय गोमुख समीपे नीत्वा पश्चिमभागस्था सती गोपुच्छदेशे पित्रे दद्यात् ॥ (आईने त्या बालकाला घेऊन गाईच्या शेपटीजवळ नेऊन बाळ वडिलांकडे द्यावे.) तत: आचार्य: पितृहस्तेन मात्रे दापयेत् । नवे वस्त्रे शिशुं संस्थाप्याच्छादनमपसार्य पुत्रमुखेक्षेणं कुर्यात् ॥ (आचार्यांनी वडिलांजवळील मुलाला घेऊन आईजवळ द्यावे. बाळाचे पूर्वी घातलेले लाल वस्त्र काढून नवीन कपडे घालावेत व वडिलांनी त्याचे मुखकमल पहावे.)तत: पंचगव्येनाचार्य: शिशुं प्रोक्षेत् ॥ ॐ आपोहिष्ठा ०॥ तत: पिता हस्तद्वयेन बालकं गृहीत्वा अवघ्राणं कुर्यात् ॥ (वडिलांनी दोन्ही हातात बालकाला उभे धरुन त्याच्या टाळूचा तीन वेळा वास घ्यावा.) अंदादंगा द्धिरण्य गर्भो धातानुष्टुप् शिशो: मूर्धनि अवघ्राणे विनि०।

**ॐ अंगादंगात्संभवसि हृदयादधिजायसे ॥ आत्मावै पुत्र नामासि सजीव शरद: शतम् ॥** ( प्रत्येक वेळी मंत्राचा उच्चार करावा. मंत्रामध्ये पुल्लिंगोच्चारण असल्याने मुलीच्या वेळी अवघ्राण करतांना मंत्रोच्चार करु नये.) **शिवाआप:संतुइति भवन्तो ब्रुवन्तु । सन्तु शिवा आप:। सौमनस्य मस्त्विती भवन्तो ब्रुवन्तु। अस्तु सौमनियम् । अक्षतंचारिष्ट चास्त्वितीभवन्तो ब्रुवन्तु । अस्तुअक्षतं चारिष्टंचा । गंधापान्तुसौमंगल्यंचास्त्विती भवन्तोब्रुवन्तु । गंधापान्तु सौमंगल्यंचास्तु । अक्षता पान्तु आयुष्यमस्त्वितीभवन्तो ब्रुवन्तु । अक्षता:पान्तुआयुष्यमस्तु । पुष्पंपान्तु सौश्रियमस्त्विती भवन्तो ब्रुवन्तु । पुष्पाणिपान्तुसौश्रियमस्तु । तांबूलानि पान्तुऐश्वर्यमस्त्विती भवन्तो ब्रुवन्तु । तांबूला निपान्तुऐश्वर्यमस्तु । दक्षिणा:पान्तु बहुदेयंचास्त्विती भवन्तो ब्रुवन्तु । दक्षिणा: पान्तु बहुदेयं चास्तु । दीर्घमायु: श्रेय: शांति: पुष्टि: तुष्टिश्चास्त्विती भवन्तो ब्रुवन्तु । दीर्घमायु: श्रेय:शांति:पुष्टि: तुष्टिश्चास्तु ॥ श्रीर्यशोविद्या विनयोवित्तंबहु पुत्रंचायुष्यं चास्त्वितीभवन्तो ब्रुवन्तु। श्रीर्यशो विद्याविनयोवित्तंबहु पुत्रं चायुष्यंचास्तु ॥ शांति**

**रस्तु । पुष्टिरस्तु । तुष्टिरस्तु । वृद्धिरस्तु अविघ्नमस्तु ।आयुष्यमस्तु । आरोग्यमस्तु । शिवंकर्मास्तु। कर्मसमृद्धिरस्तु । धर्मसमृद्धिरस्तु । वेदसमृद्धिरस्तु । शास्त्रसमृद्धिरस्तु । पुत्रसमृद्धिरस्तु ।धनधान्यासमृद्धिरस्तु । इष्टसंपदस्तु । मह्यंसहकुटुंबिने महाजनान् नमस्कुर्वाणाय आशीर्वचन अपेक्षमाणाय कृतस्य गोमुखप्रसव भावनाख्यस्य कर्मण: पुण्याहं स्वस्ति ऋद्धिं श्री:कल्याणं अस्त्वितीभवन्तो ब्रुवन्तु। ॐ पुण्याहं आयुष्मते स्वस्ति कर्मऋध्यताम्अस्तु श्री: अस्तु कल्याणं। ॐ स्वस्त्यय नंताक्ष्र्य मरिष्टनेमिं महद्भूतंवयसंदेवतानां । असुरघ्नमिंद्र सखंसमत्सु बृहद्यशोनाव मिवारुहेम । अंहोमु चमांगिरसंगयंच स्वस्त्यात्रेय मनसा च ताक्ष्र्यं । प्रयतपाणि: शरणंप्रपद्ये स्वस्ति संबाधेष्व भयंनोऽअस्तु। (यजमान) पुण्याह वाचन फलसमृद्धि:अस्त्विति भवंतो ब्रुवन्तु । (ब्राह्मण) पुण्याहवाचन फलसमृद्धिरस्तु ॥** तत: पूर्वे अधिप्रत्यधिदेवता विरहित ग्रहाणां आवाहनम् । (पूर्व दिशेला एका चौरंगावर ग्रहांचे आवाहन करावे. नंतर बृहस्पतिच्या उत्तरेस विधिवत् कलश स्थापना करुन त्यावर विष्णु वरुण व यक्ष्माण या देवतांचे आवाहन करावे.)

**तद्विष्णोर्मेधातिथिर्विष्णुर्गायत्री । विष्णवावाहने विनि०। ॐ तद्विष्णो:परमंपदं सदापश्यंति सूरय: । दिविवचक्षुराततं । विष्णवे नम:। विष्णुं आवाहयामि ।**

**तत्वायामिशुन:शेप वरुणस्त्रिष्टुप् । वरुणावाहने विनि०। ॐ तत्त्वायामि ०॥**

अक्षीभ्यामित्यस्य विवृहा यक्ष्मानुष्टुप् यक्ष्मावाहने विनि०। ॐ अक्षीभ्यांतेनासिकाभ्यां कर्णाभ्यांछुबुकादधि। यक्ष्मंशीर्षण्यंमस्तिष्कात्जिह्वायाविवृहामिते ॥ यक्ष्माणाय नम: । यक्ष्माणं आवाहयामि ॥ यथोपचारं पूजयेत् ॥ पूजान्ते कुंभं स्पृष्ट्वा अभिमंत्रयेत् । यतइंद्रेतिषण्णांभर्गइंद्रोबृहती समानांसतो बृहतीपंक्ति: कुंभाभिमंत्रणे विनि०। ॐ यतइंद्रभयामहे ततोनोअभयंकृधि । मघवन्छग्धितव तन्नऊति भिर्विद्विषो विमृधोजहि ॥ त्वंहिराधस्पतेराधसोमहःक्षयस्यासिविधतः । तंत्वावयमंधवन्निंद्र गिर्वणः सुतावंतोहवामहे ॥ इंद्रस्पळुतवृत्रहापरस्पानोवरैण्यः । सनोरक्षिषच्चरमंसमध्यमं सपश्चात्पातुनःपुर ॥ त्वंनःपश्चादधरादुत्तरात्पुरइंद्र निपाहिविश्वतः । आरे अस्मत्कृणुहिदैव्यंभयमारेहेतीरदैवीः । अद्याद्याश्वःश्वइंद्र त्रास्वपरेचनः

।। विश्वाचनोजरितृन्त्सत्पतेअहादिवानक्तंचरक्षिषः ।। प्रभंगीशूरोमघवातुवी मघःसंमिश्लोवीर्यायकम् । उभातेबाहूवृषणाशतक्रतोनियावज्रंमिमिक्षतुः ।।

अन्वाधानं - अप: षोडश संख्याकाभि: संयुक्त दधिमध्वाज्याहुतिभि: ।

विष्णुं- चतु: संख्याकाभि: तैरैव द्रव्यै: । यक्ष्माणं - चतुर्विंशति संख्याकाभि: तैरैव द्रव्यै: ।।

आपोहिष्ठेति तिसृणां सिंधुद्विप आपोगायत्री- अप्सुमे मेधातिथिर्सिंधुद्विप आपोगायत्री गोप्रसव प्रधान होमे विनि०।

ॐ आपोहिष्ठामयोभुवस्तानऊर्जेदधातन।महेरणायचक्षसे।।स्वाहा।।४।।

ॐ योवःशिवतमोरसस्तस्यभाजयतेहनः। उशतीरिवमातरः।।स्वाहा।।४।।

ॐ तस्माअरंगमामवायस्यक्षयायजिन्वथ। आपोजनयथाचनः।स्वाहा।४।

ॐ अप्सुमेसोमोअब्रवीदंतर्विश्वानिभेषजा।अग्निंचविश्वशंभुवम्।।स्वाहा।।४।।

तद्विष्णोरित्यस्य मेधातिथिर्विष्णुर्गायत्री ।गोप्रसव प्रधान होमे विनि०।

ॐ तद्विष्णोःपरमं पदंसदापष्यंतिसूरयः ।। दिवीवचक्षुराततं स्वाहा ।।४।।

अक्षीभ्यां इतिषण्णां विवृहा यक्ष्मानुष्टुप् गोप्रसव प्रधान होमे विनि०।

ॐ अक्षीभ्यांतेनासिकाभ्यांकर्णाभ्यांछुबुकादधि। यक्ष्मंशीर्षण्यंमस्तिष्काज्जिह्वा याविवृहामिते स्वाहा।।४।।

ॐ ग्रीवाभ्यस्तउष्णिहाभ्यःकीकसाभ्योअनूक्यात् । यक्ष्मंदोषण्या१ंमंसाभ्यां बाहुभ्यां विवृहामिते स्वाहा ।।४।।

ॐ आंत्रेभ्यस्तेगुदाभ्योवनिष्ठोर्हृदयादधि । यक्ष्मंमतस्नाभ्यांयक्नःप्लाशिभ्यो विवृहामिते स्वाहा ।।४।।

ॐ ऊरुभ्यांतेअष्ठीवद्भ्यांपार्ष्णिभ्यांप्रपदाभ्याम् । यक्ष्मंश्रोणिभ्यांभासदाद्भंससो विवृहामिते स्वाहा ।।४।।

ॐ मेहनाद्वनंकरणाल्लोमभ्यस्तेनखेभ्यः । यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृ हामिते स्वाहा ।।४।।

ॐ अंगादंगाल्लोम्नोलोम्नोजातंपर्वणिपर्वणि ।यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृ हामिते स्वाहा ।।४।।

ततः आकृष्णेन इत्यादि नवग्रहाणां होमे विनि०।

होमान्ते नित्यवत् स्विष्टकृतादि प्रणीताप्रणयन संस्था जपान्ते परिस्तरण विसर्जनादि आचार्याय यथाशक्तिं दक्षिणां दत्वा स्थापितदेवतानां उत्तरपूजनं-विसर्जनं पीठं आचार्याय दत्वा, अग्निं संपूज्य विभूतिधारणान्ते गच्छेति तं विसृज्य दशत्रीन् वा ब्राह्मणान् भोजयेत्॥ कर्मणः संपूर्णतां वाचयित्वा ईश्वरार्पणं कुर्यात्॥

**॥इति गोप्रसवशांतिप्रयोगः ॥**

## ॥ पुष्य जनन शांति ॥

**आचम्य देशकाल संकीर्त्य ॥ अस्य कुमारस्य/अस्या: कन्यकाया: पुष्य नक्षत्र द्वितीय /तृतीय चरण जन्मसूचित सकलारिष्ट परिहारद्वारा श्रीपरमेश्वर प्रीत्यर्थं सग्रहमखां (गोमुख प्रसवसहितां) पुष्यनक्षत्रशांतिं करिष्ये ॥ आ.ग. पू. स्व. पु. मा.नां.श्रा. आचार्यादि ऋत्विग् वरणंच करिष्ये॥** ( एका चौरंगावर वस्त्र पसरवून त्यावर तांदूळाचे अष्टदल काढून त्यावर विधिवत कलश स्थापना करावी. पूर्णपात्रावर मध्यभागी बृहस्पति, त्याच्या उजव्या बाजूस अदिती व डाव्या बाजूस सर्पाच्या प्रतिमा मांडून त्यावर अग्न्युत्तारणपूर्वक प्राणप्रतिष्ठापना करून पुढील मंत्रांनी आवाहन करावे.)

**१. बृहस्पते गृत्समदो बृहस्पतिस्त्रिष्टुप् बृहस्पत्यावाहने विनि०।**

ॐ बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु। यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥ **(ऋ. २/२३/१५)ॐ भुभूर्व:स्व: बृहस्पतये नम: बृहस्पतिम् आवाहयामि ॥**

**२. अदितिर्गोतमोदित्रिष्टुप् अदिती आवाहने विनि०।**

ॐ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्मातासपितासपुत्रः। विश्वेदेवाअदितिः पंञ्चजनाअदितिर्जातमदितिर्जनित्वम्॥ **(ऋ. १/८९/१०) ॐ भुभूर्व:स्व: अदित्यै नम: अदितीं आवाहयामि॥**

**३. आयंगौ:सार्पराज्ञी सर्पा गायत्री सर्पावाहने विनि०।**

ॐ आयंगौःपृश्निरक्रमीदसदन्मातरंपुरः। पितरंचप्रयन्त्स्वः ॥**(ऋ.१/१८९/१) ॐ भुभूर्व:स्व: सर्पाय नम: सर्पान् आवाहयामि ॥** (बृहस्पत्याद्यावाहित देवताभ्यो नम: इति नाममंत्रेण पुरुषसुक्तेनवा यथोपचारै: पूजयेत् ॥ हवन बृहस्पति २८, अदिती८, सर्प ८ द्रव्य - तिलाज्यचरूसमिद्)

**बृहस्पते गृत्समदो बृहस्पतिस्त्रिष्टुप् बृहस्पत्यादि प्रीत्यर्थे बलिदाने विनि०।**

ॐ बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवस

ऋद्यत प्रजात तदस्मासुद्रविणंधेहीचित्रम् ।। बृहस्पतये सांगाय सपरिवाराय सायुधाय सशक्तिकाय अदितीसर्पाधि देवता प्रत्यधिदेवता सहितायइमं सदिप माष भक्त बलिं सम०। भो बृहस्पते इमं बलिं गृहाण । मम यजमानस्य सकल कुटुंबस्य आयु:कर्ता क्षेमकर्ता शांतिकर्ता पुष्टिकर्ता तुष्टिकर्ता आरोग्यकर्ता सुखदोवरदो भव । अनेन बलिदानेन बृहस्पती: प्रीयतां । न मम।। होमान्ते नित्यवत् स्विष्टकृतादि प्रणीताप्रणयन संस्था जपान्ते परिस्तरण विसर्जनादि आचार्याय यथाशक्तिं दक्षिणां दत्वा स्थापितदेवतानां उत्तरपूजनं-विसर्जनं पीठं आचार्याय दत्वा, अग्निं संपूज्य विभूतिधारणान्ते गच्छेति तं विसृज्य दशात्रीन् वा ब्राह्मणान् भोजयेत् ।। कर्मण: संपूर्णतां वाचयित्वा ईश्वरार्पणं कुर्यात्।।

**आशीर्वच: मंत्र: - सहस्राक्षेणेति तिसृणां प्राजापत्यो इंद्राग्नी आदौ द्वौ त्रिष्टप् अंते अनुष्टुप् । ॐ सहस्राक्षेण शतशारदेन शतायुषा हविषा हार्ष मेनम् । शतं यथेमं शरदो नयातीन्द्रो विश्वस्य दुरितस्य पारम् ।। शतं जीव शरदो वर्धमान: शतं हेमन्ताञ्छ तमु वसंतान् । शतमिंद्राग्नी सविता बृहस्पति: शतायुषा हविषेमं पुनर्दु: । आहार्षं त्वाविदं त्वा पुनरागा: पुनर्नव । सर्वाङ्ग सर्वं ते चक्षु: सर्वमायुश्च तेऽविदम् ।। (ऋ१०/१६१/३-५)**

**।। इति पुष्य जनन शांति प्रयोग: ।।**

## ॥ अथ मघा जनन शांति ॥

**आचम्य देशकाल संकीर्त्य ॥ अस्य कुमारस्य/अस्या: कन्यकाया: मघा नक्षत्र प्रथम चरण जन्मसूचित सकलारिष्ट परिहारद्वारा श्रीपरमेश्वर प्रीत्यर्थं सग्रहमखां (गोमुख प्रसवसहितां) मघानक्षत्रशांतिं करिष्ये ॥ आ.ग.पू. स्व.पु.मा.नां.श्रा. आचार्यादि ऋत्विग् वरणंच करिष्ये॥** ( एका चौरंगावर वस्त्र पसरवून त्यावर तांदूळाचे अष्टदल काढून त्यावर विधिवत कलश स्थापना करावी. पूर्णपात्रावर मध्यभागी पितर त्याच्या उजवीकडे सर्प व डावीकडे भग यांच्या सुवर्ण प्रतिमा मांडून त्यावर अग्न्युत्तारणपूर्वक प्राणप्रतिष्ठापना करून पुढील मंत्रांनी आवाहन करावे.)

**१. येचेहेतिशंख:पितर स्त्रिष्टुप् पितरावाहने विनि०। (ऋ. १०/१५/१३)**
ॐ येचेहपितरोयेचनेहयाँश्चविद्मयाँउचनप्रविद्म । त्वंवेत्थयतितेजातवेदः स्वधाभिर्यज्ञंसुकृतंजुषस्व ॥ **ॐ भुभूर्व:स्व: पितराभ्यां नम: । पितरं आवाहयामि ॥**

**२. आयंगौ:सार्पराज्ञी सर्पा गायत्री सर्पावाहने विनि०।**
ॐ आयंगौःपृश्निरक्रमीदसदन्मातरंपुरः । पितरंचप्रयन्त्स्वः ॥**(ऋ.१/१८९/१) ॐ भुभूर्व:स्व: सर्पाय नम: सर्पान् आवाहयामि ॥**

**३. मैत्रावरुणिर्वसिष्ठ: विश्वेदेवा त्रिष्टुप् भगावाहने विनि०। (ऋ.७/३५/२)**
ॐ शंनोभगः शमुनःशंसोअस्तुशंनःपुरंधिः शमु संतुरायः । शंनः सत्यस्य सुयमस्य शं सःशंनोअर्यमापुरुजातोऽ अस्तु ॥ **ॐ भुभूर्व:स्व: भगाय नम: भगं आवाहयामि ॥**(पितराद्यावाहित देवताभ्यो नम: इति नाममंत्रेण पुरुषसुक्तेनवा यथोपचारै: पूजयेत् ॥ हवन पितर २८, भग ८, सर्प ८ द्रव्य - तिलाज्यचरूसमिद्)**पूजान्ते कुंभं स्पृष्ट्वा अभिमंत्रयेत् ।आतेपितरितिपंचदशर्चस्यसूक्तस्य गृत्समदो रुद्रस्त्रिष्टुप कुंभाभि मंत्रणे विनि०। ॐ आ ते पितमरुतां०।** (पहा जनन शांति संग्रह पृष्ठ ६६)

**येचेहहतिशंख:पितर स्त्रिष्टुप् पितरादि प्रीत्यर्थे बलिदाने विनि०।**

ॐ येचेहपितरोयेचनेहयाँश्चविद्मयाँउचनप्रविद्म। त्वंवेत्थयतितेजातवेदः स्वधाभिर्यज्ञंसुकृतंजुषस्व ।। पितराय सांगाय सपरिवाराय सायुधाय सशक्तिकाय भगसर्पाधि देवता प्रत्यधिदेवता सहितायइमं सदिप माष भक्त बलिं सम०। भो पितर इमं बलिं गृहाण । मम यजमानस्य सकल कुटुंबस्य आयु:कर्ता क्षेमकर्ता शांतिकर्ता पुष्टिकर्ता तुष्टिकर्ता आरोग्यकर्ता सुखदोवरदो भव । अनेन बलिदानेन पितर: प्रीयतां । न मम।। होमान्ते नित्यवत् स्विष्टकृतादि प्रणीताप्रणयन संस्था जपान्ते परिस्तरण विसर्जनादि आचार्याय यथाशक्तिं दक्षिणां दत्वा स्थापितदेवतानां उत्तरपूजनं-विसर्जनं पीठं आचार्याय दत्वा, अग्निं संपूज्य विभूतिधारणान्ते गच्छेति तं विसृज्य दशात्रीन् वा ब्राह्मणान् भोजयेत्।। कर्मण: संपूर्णतां वाचयित्वा ईश्वरार्पणं कुर्यात्।।

**।। इति मघा शांति ।।**

## ॥ वैधृति जनन शांति ॥

**आचम्य देशकाल संकीर्त्य ॥ अस्य कुमारस्य/अस्या: कन्यकाया: वैधृति जनन सूचित सकलारिष्ट परिहारद्वारा श्रीपरमेश्वर प्रीत्यर्थं सग्रहमखां (गोमुख प्रसवसहितां) वैधृति शांतिं करिष्ये ॥ आ.ग.पू.स्व.पु.मा.नां.श्रा. आचार्यादि ऋत्विग् वरणंच करिष्ये॥** ( एका चौरंगावर वस्त्र पसरवून त्यावर तांदूळाचे अष्टदल काढून त्यावर विधिवत कलश स्थापना करावी. पूर्णपात्रावर मध्यभागी सव्याहृतिक रुद्र त्याच्या उजवीकडे सूर्य व डावीकडे सोम यांच्या सुवर्ण प्रतिमा मांडून त्यावर अग्न्युत्तारणपूर्वक प्राणप्रतिष्ठापना करून पुढील मंत्रांनी आवाहन करावे.)

**१.**त्र्यंबकोवशिष्ठोरुद्रोनुष्टुप् रुद्रावाहने विनि०।

ॐ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं। उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात्॥ ॐ भूर्भुव:स्व: रुद्रेहागच्छेहतिष्ठ रुद्राय नम: । रुद्रं आवा० ।

**२.**उत्सूर्य इति मंत्रस्य मैत्रावरुणिर्वसिष्ठ सूर्यस्त्रिष्टुप् सूर्यावाहने विनि०।

ॐ उत्सूर्योबृहदर्चीष्यश्रेत्पुरुविश्वाजनिममानुषाणां। समोदिवाददृशेरोचमानःकृत्वाकृतःसुकृतःकर्तुभिर्भूत् ॥ ॐ भूर्भुव:स्व: सूर्याय नम: । सूर्यं आवाहयामि ।

**३.** आप्यायस्वगौतमोसामोगायत्री सोमावाहने विनि०।

**ॐ आप्यायस्वसमेतुतेविश्वत: सोमवृष्ण्यं । भवावाजस्य संगथे ।**

ॐ भूर्भुव:स्व: सोम इहागच्छ इह तिष्ठ सोमाय नम: । सोमंवाहयामि ।

(रुद्र प्रतिमेला स्पर्श करून १०८/१००८ वेळा महामृत्युंजय मंत्राचा जप करावा. सूर्य प्रतिमेवर सौरसूक्ताचा व सोमप्रतिमेवर आप्यायस्व०। या मंत्राचा जप करावा.हविद्रव्य - समिधा, चरु, आज्य; मृत्युंजय - तिल)

**बलिदान -** त्र्यंबकोवशिष्ठोरुद्रोनुष्टुप् रुद्रादि प्रीत्यर्थे बलिदाने विनि०।

ॐ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं। उर्वारुकमिवबंधनान्मृत्योर्मुक्षीय

मामृतात्।। रुद्राय सांगाय सपरिवाराय सायुधाय सशक्तिकाय सूर्यसोमाधि देवता प्रत्यधिदेवता सहितायइमं सदिप माष भक्त बलिं सम०। भो रुद्र इमं बलिं गृहाण। मम यजमानस्य सकल कुटुंबस्य आयु:कर्ता क्षेमकर्ता शांतिकर्ता पुष्टिकर्ता तुष्टिकर्ता आरोग्यकर्ता सुखदोवरदो भव। अनेन बलिदानेन रुद्रादय: प्रीयंतां। न मम।।

होमान्ते नित्यवत् स्विष्टकृतादि प्रणीताप्रणयन संस्था जपान्ते परिस्तरण विसर्जनादि आचार्याय यथाशक्तिं दक्षिणां दत्वा स्थापितदेवतानां उत्तरपूजनं-विसर्जनं पीठं आचार्याय दत्वा, अग्निं संपूज्य विभूतिधारणान्ते गच्छेति तं विसृज्य दशत्रीन् वा ब्राह्मणान् भोजयेत्।। कर्मण: संपूर्णतां वाचयित्वा ईश्वरार्पणं कुर्यात्।।

**।। इति वैधृति शांति ।।**

## ॥ अथ कृष्णचतुर्दशी शांति: ॥

**आचम्य देशकाल संकीर्त्य ॥ अस्य कुमारस्य/अस्या: कन्यकाया: कृष्ण चतुर्दश्यां अमुक अंश जनन सूचित सकलारिष्ट परिहारद्वारा श्रीपरमेश्वर प्रीत्यर्थं सग्रहमखां गर्गोक्तां कृष्णचतुर्दशी शांति करिष्ये ॥ आ.ग.पू.स्व.पु.मा.नां.श्रा. आचार्यादि ऋत्विग् वरणंच करिष्ये॥** (स्थंडिलाच्या पूर्व भागी एका चौरंगावर मध्यभागी विधिवत कलश स्थापन करुन त्यावर रुद्राचे आवाहन करावे. त्या मुख्य कलशाच्या आग्नेय, नैऋत्य, वायव्य व ईशान्येस एक एक कलश स्थापन करावा. त्यावर पुढे दिल्याप्रमाणे आवाहन करावे.)

**१.**त्र्यंबकोवशिष्ठोरुद्रोनुष्टुप् रुद्रावाहने विनि०।

ॐ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं । उर्वारुकमिवबंधनान्मृत्योर्मुक्षीय मा मृतात् ॥ ॐ भूर्भुव:स्व: रुद्रेहागच्छेहतिष्ठ रुद्राय नम: । रुद्रं आवा० ।

**२. (आग्नेयेस) इमंमेवरुण शुन:शेपोवरुणोगायत्री वरुणावाहने विनि०।**

ॐ इमंमेवरुणश्रुधीहवमद्याचमृळया । त्वामवस्युराचके ॥ ॐ भूर्भुव:स्व: समुद्रादिसहित वरुणाय नम: वरुणं आवाहयामि ॥

**३. (नैऋत्येस) तत्वायामिशुन:शेपो वरुणस्त्रिष्टुप वरुणावाहने विनि०।**

ॐ तत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेळ मानो वरुणेहबोध्युरुशंसमानआयुःप्रमोषीः । ॐ भूर्भुव:स्व: समुद्रादिसहित वरुणाय नम: वरुणं आवाहयामि ॥

**४. (वायव्येस)त्वंनो अग्न इत्यस्यवामदेवो वरुणस्त्रिष्टुप् वरुणावाहने विनि०।**

ॐ त्वंनोऽअग्नेवरुणस्यविद्वान्देवस्यहेळोवयासिसीष्ठाः। यजिष्ठोवह्नि तमःशोशुचानोविश्वद्वेषांसिप्रमुग्ध्यस्मत् ॥ ॐ भूर्भुव:स्व: समुद्रादिसहित वरुणाय नम: वरुणं आवाहयामि ॥

**५. (ईशान्येस) सत्वंन इत्यस्यवामदेवो वरुणस्त्रिष्टुप् वरुणावाहने विनि०।**

ॐ सत्वंनोऽअग्नेवमोभवोतीनेदिष्ठोऽअस्याऽउषसोव्युष्टौ। अवयक्ष्वनो वरुणं रराणोवीहिमृळीकंसुहवोनऽएधी ॥ॐ भूर्भुव:स्व: समुद्रादिसहित वरुणाय नम: वरुणं आवाहयामि ॥ (चारही वरुण कलशांवर क्रमाने आनोभद्रा, भद्राअग्ने, सहस्रशीर्षा व कद्रुद्राय या सूक्तांचा जप करावा.रुद्राला हविर्द्रव्य- समिधा-आज्य-तिल-माष-सर्षप-चरु संमिश्रद्रव्य: १०८/२८/८, अग्नि वायु सुर्य प्रजापतिं- तिल १०८/२८)

**बलिदान -** त्र्यंबकोवशिष्ठोरुद्रोनुष्टुप् रुद्रादि प्रीत्यर्थे बलिदाने विनि०।
ॐ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं । उर्वारुकमिवबंधनान्मृत्योर्मुक्षीय मा मृतात् ॥ ॐ भूर्भुव:स्व: रुद्रादि देवता सांगाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदिप माष भक्त बलिं सम०। भो रुद्रदि देवता: इमं बलिं गृहाण । मम यजमानस्य सकल कुटुंबस्य आयु:कर्ता क्षेमकर्ता शांतिकर्ता पुष्टिकर्ता तुष्टिकर्ता आरोग्यकर्ता सुखदोवरदो भव । अनेन बलिदानेन रुद्रादय: प्रीयंतां । न मम॥

होमान्ते नित्यवत् स्विष्टकृतादि प्रणीताप्रणयन संस्था जपान्ते परिस्तरण विसर्जनादि आचार्याय यथाशक्तिं दक्षिणां दत्वा स्थापितदेवतानां उत्तरपूजनं-विसर्जनं पीठं आचार्याय दत्वा, अग्निं संपूज्य विभूतिधारणान्ते गच्छेति तं विसृज्य दशत्रीन् वा ब्राह्मणान् भोजयेत् ॥ कर्मण: संपूर्णतां वाचयित्वा रुद्रार्पणं कुर्यात् ॥

**॥ इति कृष्णचर्तुदशी शांति: ॥**

## ।। भद्रा जनन शांति ।।

**आचम्य देशकाल संकीर्त्य ।। अस्य शिशो: भद्रा जनन सूचित सकलारिष्ट परिहारद्वारा श्रीपरमेश्वर प्रीत्यर्थं गोप्रसव सहितां सग्रहमखां गर्गोक्तां भद्राजनन शांति करिष्ये ।। आ.ग.पू.स्व.पु.मा.नां.श्रा. आचार्यादि ऋत्विग् वरणंच करिष्ये।।**

(स्थंडिलाच्या पूर्व भागी एका चौरंगावर मध्यभागी विधिवत कलश स्थापन करुन त्यावर भद्राचे आवाहन करावे. त्या मुख्य कलशाच्या पूर्व, दक्षिण, पश्चिम व उत्तरेस एक एक कलश स्थापन करावा. त्यावर पुढे दिल्याप्रमाणे आवाहन करावे.)

मध्ये - भद्राअग्नेसुमित्रो भद्राजगती भद्रावाहने विनि०।

ॐ भद्राऽअग्नेर्वध्र्यश्वस्यसंदृशौवामीप्रणीतिःसुरणाऽउपैतयः। यदिंसुमित्राविशोऽअग्रेऽइंदतैघृतेनाहुतोजरतेदविंद्युतत् ।।किंवा **ॐ भद्राऽअश्वाहरित:सूर्यस्य चित्रा ऽएतग्वाऽअनुमाद्यास: ।नमस्यंतोदिवऽआपृष्ठमस्थु:परिद्यावापृथिवीयंति सद्य: ।।** भद्रायै नम: भद्रां आवाहयामि।

पूर्वेस -आकृष्णेन हिरण्यस्तूप: सवितात्रिष्टुप् सूर्यावाहने विनि०।

ॐ आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतंमर्त्यंच । हिरण्ययेन सवितारथेनादेवोयातिभुवनानिपश्यन् ।। सूर्याय नम: सूर्यं आवाहयामि

दक्षिणेस - कद्रुद्राय कण्वोरुद्रो गायत्री रुद्रावाहने विनि०।

ॐ कद्रुद्रायप्रचेतसेमीढुष्टमायतव्यसे। वोचेमशंतमंहृदे ।। रुद्राय नम: रुद्रं आवाहयामि।

पश्चिमेस - गणानांत्वा शौनको गृत्समदोगणपतिर्जगति गणपत्यावाहनेविनियोग:।

ॐ गणानांत्वागणपतिंहवामहेकविं कवीनामुपमश्रवस्तमम्। ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आनःशृण्वन्नूतिभिः सीदसादनम् ।।

गणपतये नम: गणपतिं आवाहयामि ।।

उत्तरेस - ऋषभंमा ऋषभ नंदीश्वरोऽनुष्टुप् नंदीश्वरावाहने विनि०।

ॐ ऋषभंमासमानानांसपत्नानांविषसहिं। हंतारंशत्रूणांकृधिविराजंगोपतिं गवां ॥ नंदीश्वराय नमः नंदीश्वरं आवाहयामि ॥(हविर्द्रव्य- समिधा-आज्य-तिल-तिलैः हवन संख्या भद्रां, सूर्यं, रुद्रं, गणपतिं, ऋषभं १००८/१०८/२८/८)

**बलिदान -** भद्राअग्नेसुमित्रो भद्राजगती भद्रादि प्रीत्यर्थे बलिदाने विनि०।

ॐ भद्राऽअग्नेर्वैध्व्यश्वस्यसंदृशौवामीप्रणीतिःसुरणाऽउपैतयः। यदींसुमित्राविशोऽअग्रेऽइंदतैघृतेनाहुतोजरतेदविंद्युतत्॥भद्रादि देवतेभ्यः सांगेभ्यः सपरिवारेभ्यः सायुधेभ्यषः सशक्तिकेभ्यः इमं सदिप माष भक्त बलिं सम०। भो भद्रादि देवताः इमं बलिं गृहाण। मम यजमानस्य सकल कुटुंबस्य आयुःकर्ता क्षेमकर्ता शांतिकर्ता पुष्टिकर्ता तुष्टिकर्ता आरोग्यकर्ता सुखदोवरदो भव। अनेन बलिदानेन भद्रादयः प्रीयंतां। न मम॥

होमान्ते नित्यवत् स्विष्टकृतादि प्रणीताप्रणयन संस्था जपान्ते परिस्तरण विसर्जनादि आचार्याय यथाशक्तिं दक्षिणां दत्वा स्थापितदेवतानां उत्तरपूजनं-विसर्जनं पीठं आचार्याय दत्वा, अग्निं संपूज्य विभूतिधारणान्ते गच्छेति तं विसृज्य दशत्रीन् वा ब्राह्मणान् भोजयेत् ॥ कर्मणः संपूर्णतां वाचयित्वा परमेश्वरार्पणं कुर्यात् ॥

**॥ इति भद्राजनन शांतिः ॥**

|| ज्येष्ठा शांति ||

**आचम्य देशकाल संकीर्त्य ।। अस्य शिशो: ज्येष्ठा जनन सूचित सकलारिष्ट परिहारद्वारा श्रीपरमेश्वर प्रीत्यर्थं गोप्रसव सहितां सग्रहमखां गर्गोक्तां ज्येष्ठाजनन शांति करिष्ये ।। आ.ग.पू.स्व.पु.मा.नां.श्रा. आचार्यादि ऋत्विग् वरणंच करिष्ये।।**

(स्थंडिलाच्या पूर्व भागी एका चौरंगावर मध्यभागी विधिवत कलश स्थापन करुन त्यावर इंद्राचे आवाहन करावे. या कलशांत पाण्याच्या ठिकाणी तांदूळ किंवा साळी वापराव्यात. या मध्ये पुष्प, गंध, पल्लव यांचा उल्लेख नसला तरी समंत्रक त्या त्या वस्तु कलशांत ठेवण्यास हरकत नाही. त्यावर पुढे दिल्याप्रमाणे इंद्राचे आवाहन करावे.)

इंद्रायेंदो मरुत्वतेत्यस्य कश्यप इंद्रो गायत्री इंद्रावाहने विनि०।

ॐ इंद्रायेंदोमरुत्वतेपवस्वमधुमत्तमः । ऋतस्ययोनिमासदं ।।

ॐ भुभूर्वस्व: इंद्राय नम: ।। इंद्रं आवाहयामि ।। षोडशोपचारै: पूजयेत् ।।

**(पूजा संपेपर्यंत पूजा मंत्राखेरीज इतर काहीही बोलू नये.)**

(वस्त्राप्रीत्यर्थं लाल रंगाची दोन वस्त्रे, नैवेद्यासाठी करंज्या ठेवाव्यात. )

(त्या मुख्य कलशाच्या पूर्व, दक्षिण, पश्चिम व उत्तरेस एक एक कलश स्थापन करावा.पूर्वेकडील कलश १०० छिद्रांचा असावा. विधिवत् स्थापन केलेल्या कलशांवर पुढील प्रमाणे वरुणांचे आवाहन करावे.)

पूर्वे - त्वंनो अग्न इत्यस्य वामदेवो वरुणस्त्रिष्टुप् । वरुणावाहने विनि०।

ॐ त्वंनोऽअग्नेवरुणस्यविद्वान्देवस्यहेळोवयासिसीष्ठाः। यजिष्ठोवह्नि तमःशोशुचानोविश्वद्वेषांसिप्रमुग्ध्यस्मत् ।।

ॐ भुभूर्वस्व: वरुणाय नम: वरुणं आवा०।

दक्षिणे - सत्वंन इत्यस्य वामदेवो वरुणस्त्रिष्टुप् । वरुणावाहने विनि०।

ॐ सत्वंनोऽअग्नेवमोभवोतीनेदिष्ठोऽअस्याऽउषसोव्युष्टौ । अवयक्ष्वनो वरुणं रराणोवीहिमृळीकंसुहवोनऽएधी ।।

ॐ भुभूर्वस्व: वरुणाय नम: वरुणं आवा०।

पश्चिमे - समुद्रज्येष्ठा इत्यस्य वसिष्ठो वरुणस्त्रिष्टुप् । वरुणावाहने विनि०।

ॐ समुद्रज्यैष्ठाःसलिलस्यमध्यात्पुनानायंत्यनिर्विशमानाः । इंद्रोयावज्री वृषभोररादताआपोदेवीरिहमामवंतु ॥

ॐ भुभूर्वस्व: वरुणाय नम: वरुणं आवा०।

उत्तरे - इमंमेगंग इत्यस्य सिंधुक्षित्पैय मेधो वरुण जगति । वरुणावाहने विनि०।

ॐ इमंमेगंगेयमुनेसरस्वतिशु तुद्रिस्तोमंसचतापरुष्ण्या ॥ असिक्न्या मरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ॥

ॐ भुभूर्वस्व: वरुणाय नम: वरुणं आवा०।

ॐ भुभूर्वस्व: वरुणेभ्य: नम: इति मंत्रेण यथोपचारै: पूजयेत् ॥ ( पांचहि कलशांना दर्भ मुष्टिने स्पर्श करुन पुढील मंत्र म्हणावेत. )कलशस्यमुखे विष्णु:कंठेरुद्र:समाश्रित:। मूलेतत्र स्थितोब्रह्मा मध्ये मातृ गणा:स्मृता: । कुक्षौतुसागरा:सर्वेसप्तद्वीपावसुंधरा।। ऋग्वेदोऽथ यजुर्वेद: सामवेदोह्यथर्वण:। अंगैश्च सहिता:सर्वेकलशंतुसमाश्रिता:। अत्र गायत्रि सावित्रीशांतिपुष्टीकरीतथा । आयांतु **मम** शांत्यर्थं दुरितक्षयकारका:। सर्वे समुद्रा: सरितस्तीर्थानिजलदानदा:। आयान्तु **मम** शांत्यर्थंदुरितक्षय कारका:। देव दानव संवादे मथ्यमानो महोदधौ । उत्पन्नोसि तदा कुंभविधृतोविष्णुनास्वयं । त्वत्तोये सर्व तीर्थानि देवा:सर्वेत्वयिस्थिता: । त्वयि तिष्ठन्ति भूतानित्वयि प्राणा: प्रतिष्ठिता: । शिव: स्वयं त्वमेवासि विष्णुत्वंचप्रजापति: । आदित्या वसवोरुद्रा विश्वेदेवा: सपैतृका: । त्वयितिष्ठंति सर्वेपि यत: कामफलप्रदा: । त्वत्प्रसादादिमं यज्ञं कर्तृमीहे जलोद्भव । सान्निध्यं कुरु देवेश प्रसन्नो भव सर्वदा । ( नंतर ४ ब्राह्मणांनी ४ कलशांना दर्भाचा स्पर्श करुन पूर्व कलशावर आनोभद्रा ०१०ऋ, दक्षिण कलशावर भद्रअग्ने०१२, पश्चिम कलशावर सहस्त्रशीर्षा०१६आणि उत्तर

ॐ भुभूर्वस्व: वरुणाय नम: वरुणं आवा०।ॐ भुभूर्वस्व: वरुणाय नम: वरुणं आवा०।

कलशावर कद्रुद्राय० ९ यांचा जप करावा.आचार्यांनी मध्य कलशावर इंद्रप्रीत्यर्थ इंद्रायेंदो० या मंत्राचा १०८, इंद्रविश्वा २८/८, कद्रुद्राय० त्र्यंबकं १०८/२८ असा जप करावा.)

अन्वाधान - इंद्रं पलाश समिद्-आज्य-चरु १०८/२८/८, व्याहृतिभि:-प्रजापति -तिल १०८/२८ ( चतुर्दिक्षुचे हवन नाही.)

बलिदान वगैरे झाल्यानंतर शेवटी इंद्राची प्रार्थना करावी.

**यथा प्राप्त्या सामग्र्या यत् कृता सग्रहज्येष्ठाजनन शांति: तन्मध्ये ज्ञानत: अज्ञानत: वा मंत्र तंत्र द्रव्य श्रद्धा भक्ति आदिमधये किंचिदपि न्यूनं अधिकं वा स्यात् तर्हि इंद्रदेवकृपाप्रसादात् ब्राह्मणवचनाच्च सर्वं संपूर्ण अस्तु इति भवंत: ब्रुवंतु ॥**

**आचार्य: अज्ञानाद्वाऽथवा ज्ञानाद्वैकल्याद्वाधनस्य च । यन्न्यूनमतिरिक्तं वा तत्सर्व क्षन्तुमर्हसि ॥**

॥ इति ज्येष्ठा जनन शांति: ॥

**॥ अथ व्यतीपात जनन शांति ॥**

**आचम्य देशकाल संकीर्त्य ॥ अस्य शिशो: व्यतिपात जनन सूचित-सूचयिष्यमाण सकलारिष्ट परिहारद्वारा श्रीपरमेश्वर प्रीत्यर्थं गोप्रसव सहितां सग्रहमखां शौनकोक्तां व्यतिपात जनन शांतिं करिष्ये ॥ आ.ग.पू.स्व.पु.मा. नां.श्रा. आचार्यादि ऋत्विग् वरणंच करिष्ये॥**

मुख्यदेवता स्थापन - मध्ये - व्याहृतीनां परमेष्ठी प्रजापति: प्रजापतिर्बृहती उत्सूर्य इति मंत्रस्य मैत्रावरुणिर्वसिष्ठ सूर्यस्त्रिष्टुप् सूर्यावाहने विनि०।

ॐ भूर्भवस्वः ॐ ऊत्सूर्यौबृहदर्चीष्यश्रेत्पुरुविश्वाजनिममानुषाणां ॥ समोदिवाददृशेरोचमानःकृत्वाकृतःसुकृतःकर्तुर्भिभूत् ॥

ॐ भूर्भुवस्व: सूर्य इहागच्छ इहतिष्ठ सूर्याय नम: सूर्यमावाहयामि ।

तद्दक्षिणे - अग्निदूतं काण्वो मेधातिथिरग्निर्गायत्री अग्न्यावाहने विनि०।

**ॐ अग्निंदूतंवृणीमहे होतारंविश्ववेदसं । अस्य यज्ञस्यसुक्रतुं।**

ॐ भूर्भुव:स्व: अग्नेइहागच्छ इहतिष्ठ अग्नये नम: अग्निं आवाहयामि ।

तदुत्तरे- त्र्यंबकोवशिष्ठोरुद्रोनुष्टुप् रुद्रावाहने विनि०।

**ॐ त्र्यंबकंयजामहे सुगंधींपुष्टि वर्धनम्। उर्वारुकमिव बंधनान्मृत्यो र्मुक्षिय मामृतात् ।** ॐ भूर्भुव:स्व: रुद्र इहागच्छ इहतिष्ठ रुद्राय नम: । रुद्रं आवाहयामि ।

(तिन्ही देवतांची षोडशोपचार पूजा करावी. मुख्य प्रतिमेला स्पर्श करुन सौरसूक्ताचा जप करावा.)

अन्वाधान - प्रधानदेवता सूर्य १०८/२८ समित्, चरु, आज्य ।

अग्निं रुद्रं २८/८ समित्, चरु, आज्य ।

( यानंतर स्विष्टकृत वगैरे सर्व नेहमीप्रमाणे करुन बलिदान इ. ने समापन करावे)

**॥ इति व्यतिपात जनन शांति ॥**

॥ विशाखा जनन शांति ॥

**आचम्य देशकाल संकीर्त्य ॥ अस्य शिशो: विशाखा नक्षत्र चतुर्थ चरण जनन सूचित सकलारिष्ट परिहारद्वारा श्रीपरमेश्वर प्रीत्यर्थं गोप्रसव सहितां सग्रहमखां विशाखानक्षत्रजनन शांति करिष्ये ॥ आ.ग.पू.स्व.पु.मा.नां.श्रा. आचार्यादि ऋत्विग् वरणंच करिष्ये॥** (स्थंडिलाच्या पूर्व भागी एका चौरंगावर मध्यभागी विधिवत कलश स्थापन करुन त्यावर मध्यभागी इंद्राग्नी, त्याचे दक्षिणेला वायू व उत्तरेस मित्राचे पुढे दिल्याप्रमाणे आवाहन करावे.)

१. इंद्राग्नी विश्वामित्र इंद्राग्नी गायत्री इंद्राग्न्यावाहने विनि०।

ॐ इन्द्राग्नी रोचना दिव: परि वाजेषु भूषथ: । तद् वां चेति प्र वीर्यम् ॥ (३/१२/९)

ॐ भुभूर्वस्व: इंद्राग्नीभ्यां नम: । इंद्राग्नीं आवाहयामि ॥

२. वायवायहिमधुच्छंदावायुर्गायत्री वाय्वाहने विनि०।

ॐ वायवा याहि दर्शते मे सोमा अरंकृता: । तेषां पाहि श्रुधी हवम् ॥ (१/२/१)

ॐ भुभूर्वस्व: वायवे नम: । वायूं आवाहयामि ॥

३. मित्रो जनान् गाथिनो विश्वामित्र मित्रस्त्रिष्टुप् मित्रावाहने विनि० ।

ॐ मित्रो जनान् यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम् । मित्र: कृष्टीरानिमिषामि चष्टे मित्राय हव्यं घृतवज्जुहोत ॥ (३/५९/१)

ॐ भुभूर्वस्व: मित्राय नम: । मित्रं आवाहयामि ॥

(इंद्राग्नीद्यावाहित देवताभ्यो नम: इति नाममंत्रेण पुरुषसुक्तेनवा यथोपचारै: पूजयेत् ॥ हवन इंद्राग्नी २८, वायू ८, मित्र ८ द्रव्य - तिलाज्यचरूसमिद्)

( यानंतर स्विष्टकृत वगैरे सर्व नेहमीप्रमाणे करुन बलिदान इ. ने समापन करावे)

॥ इति विशाखाजनन शांति ॥

१. गाथिनो विश्वामित्रः इंद्राग्नी । गायत्री ।

ॐ इन्द्राग्नी आ गतं सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषिता ॥ इन्द्राग्नी जरितुः सचा यज्ञो जिगाति चेतनः । अया पातमिमं सुतम् ॥ इन्द्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे । ता सोमस्येह तृम्पताम् ॥ तोशा वृत्रहणा हुवे सजित्वानापराजिता । इन्द्राग्नी वाजसातमा ॥ प्र वामर्चन्त्युक्थिनो नीथाविदो जरितारः । इन्द्राग्नी इष आ वृणे ॥१॥ इन्द्राग्नी नवतिं पुरो दासपत्नीरधूनुतम् । साकमेकेन कर्मणा ॥ इन्द्राग्नी तविषाणि वां सधस्थानि प्रयांसि च । युवोरप्तूर्यं हितम् ॥ इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः । तद् वां चेति प्र वीर्यम् ॥२॥

२. मधुच्छन्दा वैश्वामित्रः१-३ वायुः ४-६ इन्द्रवायूः ७-९ मित्रावरुणौ । गायत्री।

ॐ वायवा याहि दर्शते‍मे सोमा अरंकृताः । तेषां पाहि श्रुधी हवम् ॥ वाय उक्थेभिर्जरन्ते त्वामच्छा जरितारः । सुतसोमा अहर्विदः ॥ वायो तव प्रपृञ्चती धेना जिगाति दाशुषे । उरूची सोमपीतये ॥ इन्द्रवायू इमे सुता उप प्रयोभिरा गतम् । इन्दवो वामुशन्ति हि ॥ वायविन्द्रश्च चेतथः सुतानां वाजिनीवसू । तावा यातमुप द्रवत् ॥१॥ वायविन्द्रश्च सुन्वत आ यातमुप निष्कृतम् । मक्षि१त्था धिया नरा ॥ मित्रं हुवे पूतदक्षं वरुणं च रिशादसम् । धियं घृताचीं साधन्ता ॥ ऋतेन मित्रावरुणा‍वृतावृधावृतस्पृशा । क्रतुं बृहन्तमाशाथे ॥ कवी नो मित्रावरुणा तुविजाता उरुक्षया । दक्षं दधाते अपसम् ॥२॥

३. गाथिनो विश्वामित्रः मित्रः त्रिष्टुप् ६-९ गायत्री ।

ॐ मित्रो जनान् यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम् । मित्रः कृष्टीरनिमिषाभि चष्टे मित्राय हव्यं घृतवज्जुहोत ॥ प्र स मित्र मर्तो अस्तु प्रयस्वान् यस्त आदित्य शिक्षति व्रतेन । न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो न दूरात् ॥ अनमीवास इळया मदन्तो मितज्ञवो वरिमन्ना पृथिव्याः । आदित्यस्य व्रतमुपक्षियन्तो वयं मित्रस्य सुमतौ स्याम ॥ अयं मित्रो नमस्यः सुशेवो राजा सुक्षत्रो अजनिष्ट वेधाः । तस्य वयं सुमतौ यज्ञि यस्या‍ऽपि भद्रे सौमनसे स्याम ॥ महाँ आदित्यो नमसोपसद्यो यातयज्जनो गृणते सुशेवः । तस्मा एतत् पन्यतमाय जुष्ट‍मग्नौ मित्राय हविरा जुहोत ॥१॥ मित्रस्य चर्षणीधृतोऽवो देवस्य सानसि । द्युम्नं चित्रश्रवस्तमम् । अभि यो महिना दिवं मित्रो बभूव सप्रथाः । अभि श्रवोभिः पृथिवीम् ॥ मित्राय पञ्च येमिरे जना अभिष्टिशवसे । स देवान् विश्वान् बिभर्ति ॥ मित्रो देवेष्वायुषु जनाय वृक्तबर्हिषे । इष इष्टव्रता अकः ॥२॥

॥ भरणी जनन शांति ॥

**आचम्य देशकाल संकीर्त्य ॥ अस्य शिशो: भरणी नक्षत्र जनन सूचित सकलारिष्ट परिहारद्वारा श्रीपरमेश्वर प्रीत्यर्थं गोप्रसव सहितां सग्रहमखां भरणीनक्षत्रजनन शांति करिष्ये ॥ आ.ग.पू.स्व.पु.मा.नां.श्रा. आचार्यादि ऋत्विग् वरणंच करिष्ये॥** (स्थंडिलाच्या पूर्व भागी एका चौरंगावर मध्यभागी विधिवत कलश स्थापन करुन त्यावर मध्यभागी यम, त्याचे दक्षिणेला अश्विनीकुमार व उत्तरेस अग्निचे पुढे दिल्याप्रमाणे आवाहन करावे.)

१. यमाय मधुमत्तमेति यमो यमो बृहती यमावाहने विनि०।

ॐ यमाय मधुमत्तमं राज्ञे हव्यं जुहोतन । इदं नम ऋषिभ्य: पूर्वजेभ्य: पूर्वेभ्य: पथिकृद्भ्य: ॥ (१०/१४/१५)

ॐ भुभूर्वस्व: यमाय नम: । यमं आवाहयामि ॥

२. अश्विना गौतमोऽश्विनावुष्णिक अश्विनीकुमारावाहने विनि० ।

ॐ अश्विना वर्तिरस्मदा गोमद् दस्रा हिरण्यवत् । अर्वाग्रथं समनसा नि यच्छतम् ॥ (१/९२/१६)

ॐ भुभूर्वस्व: अश्विभ्यां नम: । अश्विनौ आवाहयामि ॥

३. अग्निंदूतं मेधातिथिरग्निर्गायत्री अग्न्यावाहने विनि० ।

ॐ अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ॥ (१/१२/१)

ॐ भुभूर्वस्व: अग्नये नम: । अग्नीं आवाहयामि ॥

(इंद्राग्नीद्यावाहित देवताभ्यो नम: इति नाममंत्रेण पुरुषसुक्तेनवा यथोपचारै: पूजयेत् ॥ हवन यम २८, अश्विनीकुमार ८, अग्नि ८ द्रव्य - तिलाज्यचरूसमिद्)

( यानंतर स्विष्टकृत वगैरे सर्व नेहमीप्रमाणे करुन बलिदान इ. ने समापन करावे)

॥ इति भरणीजनन शांति ॥

## ॥ अथाश्लेषा जनन शांति: ॥

**आचम्य देशकाल संकीर्त्य ॥ अस्य शिशो: आश्लेषा नक्षत्र जनन सूचित सकलारिष्ट परिहारद्वारा श्रीपरमेश्वर प्रीत्यर्थं गोप्रसव सहितां सग्रहमखां आश्लेषानक्षत्रजनन शांति करिष्ये ॥ आ.ग.पू.स्व.पु.मा.नां.श्रा. आचार्यादि ऋत्विग् वरणंच करिष्ये॥** (स्थंडिलाच्या पूर्व भागी एका चौरंगावर मध्यभागी विधिवत दोन कलश स्थापन करुन त्यापैकी एकावर रुद्र व वरुणाची स्थापना व पूजन करावे. त्या कलशाच्या उत्तरभागी चोविस पाकळ्यांचे कमळ करुन त्यावर दुसऱ्या कलशाची विधिवत स्थापना करावी. त्यावर मध्यभागी - )

१. नमोऽस्तु वामदेव: सर्पाऽनुष्टुप् सर्पावाहने विनि०

**ॐ** नमो अस्तु सर्पेभ्यो ये के च पृथिवीमनु ।
ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥

सर्पेभ्यो नम: सर्पान् आवाहयामि ॥

२. ॐ बृहस्पतिः प्रथमं जायमानः । तिष्यम् नक्षत्रमभि संबभूव ।
श्रेष्ठो देवानां पृतनासुजिष्णुः । दिशोऽनु सर्वा अभयन्नो अस्तु ।
तिष्यः पुरस्तादुत मध्यतो नः । बृहस्पतिर्नः परिपातु पश्चात् ।
बाधेतान्द्वेषो अभयं कृणुताम् । सुवीर्यस्य पतयस्याम ॥

पुष्याधिष्ठित बृहस्पतये नम: ॥ बृहस्पतिम् आवा० ॥

३. ॐ उपहूताः पितरो ये मघासु । मनोजवसस्सुकृतस्सुकृत्याः ।
ते नो नक्षत्रे हवमागमिष्ठाः । स्वधाबिर्यज्ञं प्रयतं जुषन्ताम् ।
ये अग्निदग्धा येऽनग्निदग्धाः । येऽमुल्लोकं पितरः क्षियन्ति ।
याꣳश्च विद्मयाꣳ उ च न प्रविद्म । मघासु यज्ञꣳ सुकृतम् जुषन्ताम् ॥

मघाधिष्ठित पितराभ्य: नम: ॥ पितरान् आवा० ॥

(कमळाच्या प्रत्येक पाकळीवर ३ /३ सुपाऱ्या मांडून त्यावर पुढील प्रमाणे आवाहन करावे. एकूण २४ देवतांचे आवाहन होईल.)

४. पूर्वाफाल्गुन्यधिष्ठित भग इहा गच्छ इह तिष्ठ भगाय नम: भगं आवाहयामि ॥

५. उत्तराफाल्गुन्यधिष्ठित अर्यमन् इहागच्छेह तिष्ठ अर्यम्णे नम: अर्यमणं आवा०॥

६. हस्ताधिष्ठित सूर्य ०

७. चित्राधिष्ठित त्वष्ट: ०

८. स्वात्यधिष्ठित वायो ०

९. अनुराधाधिष्ठित मित्र ०

१०. ज्येष्ठाधिष्ठित इंद्र ०

११. मूलाधिष्ठित निर्ऋते ०

१२. पूर्वाषाढाधिष्ठित वरुण ०

१३. उत्तराषाढाधिष्ठित विश्वेदेवा ०

१४. श्रवणाधिष्ठित विष्णो ०

१५. धनिष्ठाधिष्ठित अष्टवसव: ०

१६. शतभिषाधिष्ठित वरुण ०

१७. पूर्वाभाद्रपदाधिष्ठित अजैकपाद०

१८. उत्तराभाद्रपदाधिष्ठित अहिर्बुध्न्य ०

१९. रेवत्यधिष्ठित पूषन् ०

२०. अश्विन्यधिष्ठित अश्विनौ०

२१. भरण्यधिष्ठित यम०

२२. कृत्तिकाधिष्ठित अग्ने ०

२३. रोहिण्यधिष्ठित प्रजापते०

२४. पुनर्वस्वधिष्ठित अदिते ०

(याच्या बाहेर पूर्वेपासून सुरुवात करुन क्रमश: १. इंद्र २. अग्नि ३.यम ४.निर्ऋति ५. वरुण ६. वायू ७. सोम ८. ईशान व ९. ब्रह्मन् यांचे आवाहन करावे. यानंतर सर्पाद्यावाहित देवताभ्यो नम: या नाममंत्राने यथाशक्त्य पूजन करावे. त्यानंतर अधिप्रत्यधिसह ग्रहांची व रुद्र कलशाची स्थापना करुन होम करावा. नवग्रह ४, अधिप्रत्यधि २/२, ऋतुसंरक्षक देवता व अष्टलोकपाल १/१ या संख्येने समिधा, चरु, तिल व आज्याहुति; प्रधान देवता सर्प २८ संख्येने धृत संमिश्र पायस, समिध, आज्य, चरु यांच्या आहुति; अधिदेवता बृहस्पति व प्रत्यधि पितर यांना ८/८ तशाच, **यासाठी तैतिरीयोक्त आठ वाक्यांचे मंत्र घ्यावेत.** २४ नक्षत्र देवता, लोकपाल यांना प्रत्येकी १/१ आहुति द्याव्यात. नंतर पायसामध्ये तिळ टाकून कृसर करावा व त्याने - निर्ऋतये नम: स्वाहा निर्ऋतय इदं न मम ॥ सवित्रे ० दुर्गायै ० रुद्राय० दुर्गायै० वास्तोष्पतये० अग्नये० क्षेत्रपालाय० मित्रावरुणाभ्यां० अग्नये० यांच्या आहुति द्याव्यात. त्यानंतर समिधा, चरु, आज्य यांच्या ८ आहुति श्रियै स्वाहा श्रियै न मम अशा द्याव्यात. नंतर केवल पायसाच्या सोमाय स्वाहा सोमाय इदं न मम या मंत्राने ८ आहुति द्याव्यात. त्यानंतर केवल आज्याच्या ४ आहुति रुद्राय नम: स्वाहा रुद्राय इदं न मम या मंत्राने द्याव्यात. यांनतर स्विष्टकृत होम, प्रायश्चित्त होम, बलिदान इ करुन पूर्णाहुति करुन समापन करावे. या नंतर अभिषेक करावा. त्याचे मंत्र पुढे दिल्याप्रमाणे- )

सर्पाच्या हवनाचा अष्टवाक्याचा मंत्र -

ॐ इदꣳ सर्पेभ्यो हविरस्तु जुष्टम् । आश्रेषा येषामनुयन्ति चेतः ।
ये अन्तरिक्षं पृथिवीं क्षियन्ति । ते नस्सर्पासो हवमागमिष्ठाः ।
ये रोचने सूर्यस्यापि सर्पाः । ये दिवं देवीमनुसञ्चरन्ति ।
येषमश्रेषा अनुयन्ति कामम् । तेभ्यस्सर्पेभ्यो मधुमज्जुहोमि ॥

अभिषेकाचे मंत्र - **ह्रीं योऽसौ वज्रधरो देवो महेंन्द्रो गजवाहनः । सार्पजातशिशोर्दोषं मातापित्रोर्व्यपोहतु ॥१॥ योऽसौ शक्तिधरो देवो हुतभुङ्गेषवाहनः । सप्तजिह्वश्च देवोग्निः सार्पदोषं व्यपोहतु ॥२॥ योऽसौ दंडधरो देवो धर्मो महिषवाहनः । सार्पजातस्य पापं वै व्यपोहतु यमो मम ॥३॥ योऽसौ खङ्गधरो देवो निर्ऋती राक्षसाधिपः । प्रशामयतु सार्पोत्थं दोषं गंडान्तसंभवम् ॥४॥ योऽसौ पाशधरो देवो वरुणश्च जलेश्वरः । नक्रवाहः प्रचेतानः सार्पोत्थाघं व्यपोहतु ॥५॥ योऽसौ देवो जगत्प्राणो मारुतो मृगवाहनः । प्रशामयतु सार्पोत्थं दोषं बालस्य शान्तिदः ॥६॥ योऽसौ निधिपतिर्देवः खङ्गभृद्वाजिवाहनः । मातापित्रोः शिशोश्चैव सार्पदोषं व्यपोहतु ॥७॥ योऽसौ पशुपतिर्देवः पिनाकी वृषवाहनः । आश्लेषामूलगंडोत्थं दोषमाशु व्यपोहतु ॥८॥ विघ्नेश क्षेत्रपो दुर्गा लोकपाला नवग्रहाः । सर्वदोषप्रशमनं सर्वे कुर्वन्तु शान्तिदाः ॥९॥ आश्लेषात्रक्षजातस्य मातापित्रोर्धनस्य च । भातृज्ञातिकुलोत्थानां दोषं सर्व व्यपोहतु ॥१०॥ पितरः सर्वभूतानां रक्षन्तु पितरः सदा । सार्पनक्षत्रजातस्य वित्तं च ज्ञाति बान्धवानः ॥१२॥ सुरास्त्वामभिषिंचंतु ब्रह्मविष्णु महेश्वराः ॥ वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः ॥ प्रद्युम्नश्चानिरुश्च भवंतु विजयाय ते ॥ आखंडलोऽग्निर्भगवान्यमो वै निर्ऋतिस्तथा ॥ वरुणः पवनश्चैव धनाध्यक्षः सदाशिवः ॥ ब्रह्मणा सहिताः सर्वे दिक्पालाः पांतु ते सदा ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ॥ बुद्धिर्लज्जा वपुः शांति कांतिस्तुष्टिश्च मातरः ॥ एतास्त्वामभिषिंचंतु देवपत्न्यः समागताः ॥ आदित्यश्चंद्रमा भौमो बुधजीवसितार्कजाः ॥ ग्रहास्त्यामभिषिंचंतु राहुः केतुश्च तर्पिताः ॥ देवदानव गंधर्वा यक्षराक्षस पन्नगाः ॥ ऋषयो मनवो गावो देवमातर एव च ॥ देवपत्न्यो**

**द्रुमा नागा दैत्याश्चाप्सरसां गणा: ।। अस्त्राणि सर्वशस्त्राणि राजानो वाहनानिच ।। औषधानि च रत्नानि कालस्याव यवाश्च ये ।। सरित: सागरा: शैला स्तीर्थानि जलदा नदा: ।। एते त्वामभिषिंचंतु सर्वकामार्थ सिद्धये ।।** अभिषेकोऽस्तु शांति: पुष्टिस्तुष्टिश्चास्तु ।।

विशेष अर्घ्यं - ह्रीं गंधपुष्पाक्षतैर्युक्तं फलद्रव्य समन्वितम् । तोयमाचमनीयार्थं गृहाणार्घ्यं नमोऽस्तु ते ।।१।। फलेन फलितं तोयं फलेन फलितं धनं । फलस्यार्घ्य प्रदानेन सफलाश्च मनोरथा: ।।२।। इति विशेष अर्घ्यं ।।

।। इति आश्लेषा शांति: ।।

मेधातिथि: काण्व: । अग्नि: ।६ प्रथमपादस्य (निर्मथ्याहवनीयौ) अग्नि । गायत्री ॥

अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ॥ 1 ॥
अग्निमग्निं हवीमभिः सदा हवन्त विश्पतिम् । हव्यवाहं पुरुप्रियम् ॥ 2 ॥
अग्ने देवाँ इहावह जज्ञानो वृक्तबर्हिषे । असि होता न ईड्यः ॥ 3 ॥
ताँ उशतो वि बोधय यदग्ने यासि दूत्यम् । देवैरासत्सि बर्हिषि ॥ 4 ॥
घृताहवन दीदिवः प्रति ष्म रिषतो दह । अग्ने त्वं रक्षस्विनः ॥ 5 ॥
अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्यः ॥ 6 ॥

कविमग्निमुपस्तुहि सत्यधर्माणमध्वरे । देवममीवचातनम् ॥ 7 ॥
यस्त्वामग्ने हविष्पतिर्दूतं देव सपर्यति । तस्य स्म प्राविता भव ॥ 8 ॥
यो अग्निं देववीतये हविष्माँ आविवासति । तस्मै पावक मृळय ॥ 9 ॥
स नः पावक दीदिवोऽग्ने देवाँ इहा वह । उप यज्ञं हविश्च नः ॥ 10 ॥
स नः स्तवान आ भर गायत्रेण नवीयसा । रयिं वीरवतीमिषम् ॥ 11 ॥
अग्ने शुक्रेण शोचिषा विश्वाभिर्देवहूतिभिः । इमं स्तोमं जुषस्व नः ॥ 12 ॥

अश्विना गौतमोऽश्विनावुष्णिक

अश्विना वर्तिरस्मदा गोमद्दस्रा हिरण्यवत् । अर्वाग्रथं समनसा नि यच्छतम् ॥ 16 ॥
यावित्था श्लोकमा दिवो ज्योतिर्जनाय चक्रथुः । आ न ऊर्जं वहतमश्विना युवम् ॥ 17 ॥
एह देवा मयोभुवा दस्रा हिरण्यवर्तनी । उषर्बुधो वहन्तु सोमपीतये ॥ 18 ॥

वैवस्वतो यमः। यमः, ६ अङ्गिरःपित्रथव;भृगुसोमाः ७-९ लिङ्गोक्तदेवताः पितरो वा, १०-१२ श्वानौ। त्रिष्टुप् १३,१४,१६ अनुष्टुप् १५ बृहती॥

परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम् ।
वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्य ॥ 1 ॥
यमो नो गातुं प्रथमो विवेद नैषा गव्यूतिरपभर्तवा उ ।
यत्रा नः पूर्वे पितरः परेयुरेना जज्ञानाः पथ्या३ अनु स्वाः ॥ 2 ॥
मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधानः ।
यांश्च देवा वावृधुर्ये च देवान्त्स्वाहान्ये स्वधयान्ये मदन्ति ॥ 3 ॥
इमं यम प्रस्तरमा हि सीदाङ्गिरोभिः पितृभिः संविदानः ।
आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन् हविषा मादयस्व ॥ 4 ॥
अङ्गिरोभिरा गहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व ।
विवस्वन्तं हुवे यः पिता तेऽस्मिन् यज्ञे बर्हिष्या निषद्य ॥ 5 ॥
अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः ।
तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥ 6 ॥
प्रेहि प्रेहि पथिभिः पूर्व्येभिर्यत्रा नः पूर्वे पितरः परेयुः ।
उभा राजाना स्वधया मदन्ता यमं पश्यासि वरुणं च देवम् ॥ 7 ॥
सं गच्छस्व पितृभिः सं यमेनेष्टापूर्तेन परमे व्योमन् ।
हित्वायावद्यं पुनरस्तमेहि सं गच्छस्व तन्वा सुवर्चाः ॥ 8 ॥
अपेत वीत वि च सर्पतातोऽस्मा एतं पितरो लोकमक्रन् ।
अहोभिरद्भिरक्तुभिर्व्यक्तं यमो ददात्यवसानमस्मै ॥ 9 ॥
अति द्रव सारमेयौ श्वानौ चतुरक्षौ शबलौ साधुना पथा ।
अथा पितॄन्त्सुविदत्राँ उपेहि यमेन ये सधमादं मदन्ति ॥ 10 ॥
यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ ।
ताभ्यामेनं परि देहि राजन्त्स्वस्ति चास्मा अनमीवं च धेहि ॥ 11 ॥
उरूणसावसुतृपा उदुम्बलौ यमस्य दूतौ चरतो जनाँ अनु ।
तावस्मभ्यं दृशये सूर्याय पुनर्दातामसुमद्येह भद्रम् ॥ 12 ॥
यमाय सोमं सुनुत यमाय जुहुता हविः ।
यमं ह यज्ञो गच्छत्यग्निदूतो अरंकृतः ॥ 13 ॥

यमाय घृतवद्धविर्जुहोत प्र च तिष्ठत ।
स नो देवेष्वा यमद्दीर्घमायुः प्र जीवसे ॥ 14 ॥

यमाय मधुमत्तमं राज्ञे हव्यं जुहोतन ।
इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः ॥ 15 ॥

त्रिकद्रुकेभिः पतति षळुर्वीरेकमिद्बृहत् ।
त्रिष्टुब्गायत्री छन्दांसि सर्वा ता यम आहिता ॥ 16 ॥

## ॥ यमल जनन शांति ॥

**आचम्य देशकाल संकीर्त्य ॥ अस्य मम भार्याया यमलजनन सूचित सकलारिष्ट परिहारद्वारा श्रीपरमेश्वर प्रीत्यर्थं सग्रहमखां यमलजनन स्थालिपाकेन शांति करिष्ये ॥ आ.ग.पू.स्व. पु.मा.नां.श्रा. आचार्यादि ऋत्विग् वरणंच करिष्ये॥** (स्थंडिलाच्या पूर्व भागी एका चौरंगावर पूर्वादि क्रमेण ८ कलश विधिवत स्थापन करुन त्यावर वरुणाची स्थापना व पूजा करावी.पूजेनंतर प्रत्येक कलशाला दर्भ स्पर्श करुन कलशस्यमुखे० देवदानव० हे मंत्र यजमानाकडून म्हणून घ्यावेत. नंतर एका कलशामध्ये सर्व कलशातील जल एकत्र करुन दंपतीला मुलांसह दर्भासनावर बसवून अभिषेक करावा. )

१. आपोहिष्ठेति तिसृणां आंबरीषः सिंधुद्विप आपो गायत्री अभिषेके विनि०

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥ 1 ॥
यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥ 2 ॥
तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥ 3 ॥
शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभि स्रवन्तु नः ॥ 4 ॥
ईशाना वार्याणां क्षयन्तीश्चर्षणीनाम् । अपो याचामि भेषजम् ॥ 5 ॥
अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा । अग्निं च विश्वशंभुवम् ॥ 6 ॥
आपः पृणीत भेषजं वरूथं तन्वे३ मम । ज्योक्च सूर्यं दृशे ॥ 7 ॥

२. कयान इतिद्वयोर्वामदेव इंद्रो गायत्री अभिषेके विनि०

कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥ 1 ॥
कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः । दृळ्हा चिदारुजे वसु ॥ 2 ॥

३. आनस्तुत इति पंचानां वामदेव इंद्रस्त्रिष्टुप् अभिषेके विनि०

आ नः स्तुत उप वाजेभिरूती इन्द्र याहि हरिभिर्मन्दसानः ।
तिरश्चिदर्यः सवना पुरूण्याङ्गूषेभिर्गृणानः सत्यराधाः ॥ 1 ॥
आ हि ष्मा याति नर्यश्चिकित्वान्हूयमानः सोतृभिरुप यज्ञम् ।
स्वश्वो यो अभीरुर्मन्यमानः सुष्वाणेभिर्मदति सं ह वीरैः ॥ 2 ॥

श्रावयेदस्य कर्णा वाजयध्यै जुष्टामनु प्र दिशं मन्दयध्यै ।
उद्वावृषाणो राधसे तुविष्मान्करन्न इन्द्रः सुतीर्थाभयं च ॥ 3 ॥
अच्छा यो गन्ता नाधमानमूती इत्था विप्रं हवमानं गृणन्तम् ।
उप त्मनि दधानो धुर्याशून्त्सहस्राणि शतानि वज्रबाहुः ॥ 4 ॥
त्वोतासो मघवन्निन्द्र विप्रा वयं ते स्याम सूरयो गृणन्तः ।
भेजानासो बृहद्दिवस्य राय आकाय्यस्य दावने पुरुक्षोः ॥ 5 ॥

४. मोष्विति पंचानां वसिष्ठो वरुणो गायत्री अंत्यागती अभिषेके विनि०

मो षु वरुण मृन्मयं गृहं राजन्नहं गमम् । मृळा सुक्षत्र मृळय ॥ 1 ॥
यदेमि प्रस्फुरन्निव दृतिर्न ध्मातो अद्रिवः । मृळा सुक्षत्र मृळय ॥ 2 ॥
क्रत्वः समह दीनता प्रतीपं जगमा शुचे । मृळा सुक्षत्र मृळय ॥ 3 ॥
अपां मध्ये तस्थिवांसं तृष्णाविदज्जरितारम् । मृळा सुक्षत्र मृळय ॥ 4 ॥
यत्किं चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि ।
अचित्ती यत्तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः ॥ 5 ॥

५. इदमाप इत्यस्य सिंधुद्वीप आपोनुष्टुप् अभिषेके विनि०

इदमापः प्र वहत यत्किं च दुरितं मयि ।
यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ॥ 8 ॥
आपो अद्यान्वचारिषं रसेन समगस्महि ।
पयस्वानग्न आ गहि तं मा सं सृज वर्चसा ॥ 9 ॥

६.अपनः शोशुचदघमित्यष्टर्चस्य सूक्तस्य कुत्सोग्निर्गायत्री अभिषेके विनि०

अप नः शोशुचदघमग्ने शुशुग्ध्या रयिम् । अप नः शोशुचदघम् ॥ 1 ॥
सुक्षेत्रिया सुगातुया वसूया च यजामहे । अप नः शोशुचदघम् ॥ 2 ॥
प्र यद्भन्दिष्ठ एषां प्रास्माकासश्च सूरयः । अप नः शोशुचदघम् ॥ 3 ॥
प्र यत्ते अग्ने सूरयो जायेमहि प्र ते वयम् । अप नः शोशुचदघम् ॥ 4 ॥
प्र यदग्नेः सहस्वतो विश्वतो यन्ति भानवः । अप नः शोशुचदघम् ॥ 5 ॥
त्वं हि विश्वतोमुख विश्वतः परिभूरसि । अप नः शोशुचदघम् ॥ 6 ॥
द्विषो नो विश्वतोमुखाति नावेव पारय । अप नः शोशुचदघम् ॥ 7 ॥
स नः सिन्धुमिव नावयाति पर्षा स्वस्तये । अप नः शोशुचदघम् ॥ 8 ॥

(अभिषेका नंतर नेहमीप्रमाणे अग्नि, ग्रह व वरुणाची स्थापना व पूजन करुन हवन करावे. ग्रहांसाठी आज्य, समित्, चरु ही द्रव्य घ्यावीत.इतर देवतांमध्ये अप: ३, इंद्रं ७, वरुण ५, अप १, अग्नि ८ अशा आज्याहुति द्याव्यात. आणखीन अग्नि, सोम, पवमान, पावक, मारुत, मरुत, यम, अंतक, मृत्यु. या देवतांच्या नाममंत्राने चर्वाहुति द्याव्यात.)

अद्भ्य:नम:  स्वाहा अद्भ्य: इदं न मम ॥३॥

इंद्राय नम: स्वाहा इंद्राय इदं न मम ॥७॥

वरुणाय नम: स्वाहा वरुणाय इदं न मम ॥५॥

अद्भ्य: नम: स्वाहा अद्भ्य: इदं न मम ॥१॥

अग्नये नम: स्वाहा अग्नये इदं न मम ॥८॥

अग्नये नम: स्वाहा अग्नये इदं न मम ॥१॥

सोमाय नम: स्वाहा सोमाय इदं न मम ॥१॥

पवमानाय नम: स्वाहा पवमायेदं न मम ॥१॥

पावकाय नम: स्वाहा पावकाय इदं न मम ॥१॥

मारुत: नम: स्वाहा मारुताय इदं न मम ॥१॥

मरुताय नम: स्वाहा मरुताय इदं न मम ॥१॥

यमाय नम: स्वाहा मरुताय इदं न मम ॥१॥

अंतकाय नम: स्वाहा अंतकाय इदं न मम ॥१॥

मृत्यवे नम: स्वाहा मृत्यो: इदं न मम ॥१॥

( यानंतर स्विष्टकृत वगैरे सर्व नेहमीप्रमाणे करुन बलिदान इ. ने समापन करावे)

॥ इति यमल जनन शांति ॥

॥ मूल शांति ॥

**आचम्य देशकाल संकीर्त्य ॥ अस्य कुमारस्य/ अस्या: कन्यकाया:मूल नक्षत्र जनन अमुक चरण सूचित सकलारिष्ट परिहारद्वारा श्रीपरमेश्वर प्रीत्यर्थं शौनकोक्त प्रकारेण गोप्रसव सहितां सग्रहमखां आश्लेषानक्षत्रजनन शांति करिष्ये ॥ आ.ग.पू.स्व.पु., मा.नां.श्रा. आचार्यादि ऋत्विग् वरणंच करिष्ये॥** ( आचार्यांनि पवित्र धारण करुन अमुक गोत्रोत्पन्नेन अमुक शर्मणा/वर्मण:/गुप्त:/दास: यजमानेन वृतोहं संकल्पित मूलशांतिकर्मणि आचार्यकर्म करिष्ये। आदौ निर्विघ्नतासिद्ध्यर्थं महागणपतिस्मरण, शरीरशुद्ध्यर्थं पुरुषसूक्तजपं, स्थलशुद्ध्यर्थं सर्षप विकीर्णं, पंचगव्य प्रोक्षणं, शुद्धोदक प्रोक्षणं च करिष्ये। असा संकल्प करावा.)

मूलशांतिच्या देवता स्थापन करण्यासाठी एका भांड्यात पाणी भरुन ॐ **एतोन्विंद्र स्तवामेशानं वस्वःस्वराजं ।। न राधसा मर्धिषन्नः ।। प्रस्तौषदुपं गासिषच्छ्रवत्सामं गीयमानं ।। अभि राधसा जुगुरत् ।।** या मंत्राने ते अभिमंत्रण करुन आपोहिष्ठा या मंत्राने भूमीवर प्रोक्षण करावे. या प्रोक्षण केलेल्या भूमीवर ईशान्य दिशेला रांगोळीचे स्वस्तिक काढून त्यावर विधीवत कलश स्थापन करावेत.

महिद्यौ० पृथ्वी, आकलेषु० कलश, युवासुवासा० वस्त्रावगुंठित कलश, इमंमेगंगे० पाण्याने भरावा, ॐ **शरासः कुशरासो दर्भासः सैर्याउत । मौंजा अदृष्टा वैरिणाः सर्वे साकंन्यं लिप्सत ।।** या मंत्राने कूर्चा , हिरण्यरूप० हिरण्य, अश्वत्थेंवो० पांच पल्लव, सहिरत्नानि० पांच रत्ने, या ओषधी० सर्वौषधि तसेच यव, गंधद्वारा० गंधं, या फलिनीर्या:० फुले, फले; स्योना पृथिवी० मृत्तिका, आपोहिष्ठा० पंचगव्य,

ॐ रुवति भीमो वृषभस्तविष्यया शृङ्गे शिशानो हरिणी विचक्षणः ।
आ योनिं सोमः सुकृतं नि षीदति गव्ययी त्वग्भवति निर्णिगव्ययी ॥

या मंत्राने झाडांच्या साली, पंचामृताच्या मंत्रांनी पंचामृत, पूर्णादर्वि० पूर्णपात्र ठेवावे. या पूर्णपात्राच्या चारहि दिशांना ४ कलश विधिवत स्थापन करावेत. मधल्या कलशावर तांदूळाच्या राशिवर कुंकवाने अष्टदल काढून सोन्याच्या प्रतिमेववर -

याते रुद्रेति मंत्रस्य कश्यपोरुद्र: स्वराडनुष्टुप: रुद्रावाहने विनि०

ॐ या ते रुद्र शिवा तनू-रघोराऽपापकाशिनी ।
तया नस्तनुवा शन्तमया गिरिशंताभिचाकशीहि ॥ रुद्राय नम: आवा०

या मंत्रानेच षोडशोपचार पूजा करावी. त्यानंतर बाजूच्या चारही कुंभांवर पूर्वेपासून ४ वरुणांचे आवाहन करावे.

१. पूर्व – इमंमे वरुण शुन:शेपोवरुणो गायत्री वरुणावाहने विनि०

ॐ इमं मे वरुण श्रुधी हवमद्या च मृळय । त्वामवस्युरा चके ॥

ॐ भूभुर्वस्व: वरुणाय नम: वरुणं आवाहयामि ।

२. दक्षिण – तत्वायामिशुन:शेपोवरुणस्त्रिष्टुप् वरुणावाहने विनि०

ॐ तत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भि:।।

अहेळ मानोवरुणेहबोध्युरुशंसमानआयु:प्रमोषी:।।

ॐ भूभुर्वस्व: वरुणाय नम: वरुणं आवाहयामि ।

३. त्वंनो अग्न इत्यस्य वामदेवो वरुणस्त्रिष्टुप् वरुणावाहने विनि०

ॐ त्वं नो अग्ने वरुणस्य विद्वान्देवस्य हेळोऽव यासिसीष्ठाः
यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्र मुमुग्ध्यस्मत्

ॐ भूभुर्वस्व: वरुणाय नम: वरुणं आवाहयामि ।

४. सत्वंन अग्न इत्यस्य वामदेवो वरुणस्त्रिष्टुप् वरुणावाहने विनि०

ॐ स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ
अव यक्ष्व नो वरुणं रराणो वीहि मृळीकं सुहवो न एधि

ॐ भूभुर्वस्व: वरुणाय नम: वरुणं आवाहयामि ।

चारही वरुणांची पंचोपचार पूजा करुन कलशांना दर्भाने स्पर्श करुन जप करावा.

नंतर या स्थापित कुंभाच्या उत्तरेस तांदूळाचे अष्टदल तयार करुन त्यावर विधीवत कलश स्थापन करुन त्या कलशावर मध्ये–

१. मोषुणो घौर: कण्वो निर्ऋति गायत्री निर्ऋत्यावाहने विनि०

**ॐ मोषुण:परापरानिर्ऋतिर्दुर्हणावधीत् । पदीष्टतृष्णयासह ॥**

ॐ भूभुर्वस्व: निर्ऋतये नम: आवा.

२. इंद्रंवो मधुच्छंदा इंद्रो गायत्री इंद्रावाहने विनि०

**ॐ इंद्रंवोविश्वतस्परिहवामहे जनेभ्य: । अस्माकमस्तुकेवल: ॥**

ॐ भूर्भुवस्व: इंद्राय नम: इंद्रं आवा०
३. अप्सुमे मेधातिथि: आपोनुष्टुप् अबावाहने विनि०
ॐ **अप्सुमेसोमोअब्रवीदंतर्विश्वानिभेषजा ।अग्निंचविश्व शंभुवमापश्च विश्वभेषजीः ॥**
ॐ भूर्भुवस्व: सोमाय नम: सोमं आवा० ।
याच ताम्हनात अष्टलोकपालांचेही आवाहन करावे. नंतर पूर्वेपासून सुरुवात करून अष्टदलाच्या प्रत्येक पाकळीवर तीन नक्षत्र देवतांचे आवाहन करावे. ते असे-

१. विश्वेभ्यो देवेभ्यो नम: विश्वान्देवान् आवा०
२. विष्णवे नम: विष्णुं आवा०
३. वसूनो नम: वसून आवा०
४. वरुणाय नम: वरुणं आवा०
५. अजैकपादाय नम: अजैकपादं आवा०
६. अहिर्बुध्न्याय नम: अहिर्बुध्न्यं आवा०
७. पूष्णे नम: पूष्णीं आवा०
८. अश्विभ्यां नम: अश्विनौ आवा०
९. यमाय नम: यमं आवा०
१०. अग्नये नम: अग्निं आवा०
११. ब्रह्मणे नम: ब्रह्माणं आवा०
१२. सोमाय नम: सोमं आवा०
१३. रुद्राय नम: रुद्रं आवा०
१४. अदितये नम: अदितिं आवा०
१५. बृहस्पतये नम: बृहस्पतिं आवा०
१६. सर्पेभ्यो नम: सर्पान् आवा०
१७. पितृभ्यो नम: पितृन् आवा०
१८. भगाय नम: भगं आवा०
१९. अर्यमणे नम: अर्यमणं आवा०
२०. सवित्रे नम: सवितारं आवा०
२१. त्वष्ट्रे नम: त्वष्टारं आवा०
२२. वायवे नम: वायुं आवा०
२३. इंद्राग्नीभ्यां नम: इंद्राग्नौ आवा०
२४. मित्राय नम: मित्रं आवा०

गोप्रसवाच्या देवतांना - विष्णु(४), वरुण(४), यक्ष्माण(८) व केवल ग्रह यांना दही, मध, आज्या यांच्या आहुति द्याव्यात.
मूळ शांतिच्या देवतांमध्ये नवग्रहांना समिधा, चरू, आज्य यांच्या ४/४ आहुति, अधिदेवता, प्रत्याधि-देवतांच्या २/२, क्रतुसंरक्षक देवता प्रत्येकी १/१ अशा आहुति द्याव्यात.
मुख्य देवतांमध्ये निर्ऋतिला घृत संमिश्र पायस, समिधा, चरू, आज्य यांच्या २८, इंद्र व आप यांना त्याच द्रव्याच्या ८/८ आहुति द्याव्यात. विश्वेदेवा इ. २४ देवतांसाठी पायसाच्या प्रत्येकी १/१ आहुति द्यावी. पुढे दिलेल्या देवतांना त्या त्या मंत्रांनी त्यांच्या नांवापुढे दर्शविल्याप्रमाणे आहुति द्याव्यात.

रक्षोहणअग्नि (कृसर) - ॐ **रक्षोणोऽअग्ने तव रक्षणेभी रारक्षाणः सुमखप्रीणानः । प्रतिष्फुर विरुज वीड्वं हो जहिरक्षो महिचिद् वा वृधानम्** ॥१५॥

सवितारं - ॐ तत्सवितुर्वरेण्यं० ॥१॥

दुर्गा - ॐ जातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः । सनःपर्षद तिदुर्गाणि विश्वानावेवसिंधुंदुरितात्यग्निः ॥ १॥

त्र्यंबक - ॐ त्र्यंबकं यजामहे० ॥१॥

कवि - ॐ **सीरायुजंति कवयो युगा वितन्वते पृथक् । धीरादेवेषु सुम्नया ॥१॥**

दुर्गा - ॐ*तामग्निवर्णातपसाज्वलंती वैरोचनींकर्मफलेषुजुष्टां ॥ दुर्गादेवींशरणमहं प्रपद्येसुतरसितरसेनमःसुतरसितरसेनमः ॥ १॥*

अग्निं - ॐ अग्निंदूतं वृणीमहे० ॥१॥

क्षेत्रपाल - ॐ क्षेत्रस्य पतीना वयं ० ॥१॥

मित्रावरुण - ॐ **गृणानां जमदग्निना योना वृतस्य सीदंत । पातं सोममृतावृधा ॥१॥**

अग्नि - ॐ **अग्निं दूतं पुरोदधे हव्यवाह मुपब्रुवे । देवाँ ऽ आसादयादिह ॥ १॥**

सोम (पायस) - ॐ **त्वं नः सोम विश्वतो वयोधास्त्वं स्वविष्ठदा विशा नृचक्षाः । त्वं न इंद्र ऊतिभिः सजोषाः पाहिपश्चातादुत वा पुरस्तात् ॥१३॥**

ॐभूरग्नयेचपृथिव्यैचमहतेच स्वाहा । अग्नयेपृथिव्यैमहतेच इदं न मम ॥ १॥

ॐ भुवोवायवेचांतरिक्षायचमहतेच स्वाहा । वायवेचांतरिक्षायचमहतेच इदं न मम ॥१॥

ॐ सुवरादित्याचदिवेचमहतेच स्वाहा । आदित्यायदिवेमहतेच इदंन मम ॥१॥

ॐ भूर्भुवःसुवःश्चंद्रमसेचनक्षत्रेभ्यश्चदिग्भ्यश्चमहतेच स्वाहा । चंद्रमसेनक्षत्रेभ्यो दिग्भ्यो महतेचेदं न मम ॥१॥ (आज्येन)

**निर्ऋतिच्या पूजेसाठी दोन वस्त्र, पांढरी फुले, नैवेद्यासाठी पोळी, भात असावा.**

या नंतर स्विष्टकृत, बलिदान, पूर्णाहुति इ. करावे. रुद्र कलशाला स्पर्श करुन एका ब्राह्मणाने १०८ वेळा महामृत्युंजय मंत्राचा जप करावा. या नंतर यजमानाला पत्नी व बालकासह अभिषक करावा. अभिषका नंतर यजमानाने आपोहिष्ठा० या मंत्राने पाणी प्रोक्षण करुन स्नान करावे. यजमानाने शुभ्र वस्त्र परिधान करुन अग्निची पूजा करुन विभूति धारण करावी. समारोपाचे संकल्प करावेत. ॥ इति मूल शांतिः ॥

## ब्रह्मणस्पति सूक्त

हरिःॐ ।। सोमानं स्वरणं कृणुहि ब्रह्मणस्पते ।। कक्षीवन्तं यऽऔ शिजः ।।१।। यो रेवान्योऽअमीवहा वसुवित्पुष्टि वर्धनः ।। स नः सिषक्तु यस्तुरः ।।२।। मा नः शंसोऽअररुषो धूर्तिः प्रणङ् मर्त्यस्य ।। रक्षाणोब्रह्मणस्पते ।।३।। स घा वीरो न रिष्यति यमिन्द्रो ब्रह्मणस्पतिः ।। सोमो हिनोतिमर्त्यं ।।४।। त्वं तं ब्रह्मणस्पते सोमऽइन्द्रश्च मर्त्यं ।। दक्षिणा पात्वंहसः ।।५।। उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे ।। उप प्र यन्तु मरुतः सुदानवऽइंद्र प्राशूर्भवा सचा ।।६।। त्वामिध्दि सहसस्पुत्र मर्त्यऽउप ब्रुते धने हिते ।। सुवीर्यं मरुतऽआस्वश्रव्यं दधीत यो व आचके ।।७।। प्रैतु ब्रह्मणस्पतिः प्र देव्यैतु सूनृता ।। अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयंतु नः ।।८।। यो वाघ ते ददाति सूनरं वसु स धत्तेऽअक्षिति श्रवः ।। तस्माऽइळाँ सुवीरामा यजामहे सुप्रतूर्तिमने हसं ।।९।। प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यं ।। यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवाऽओकांसि चक्रिरे ।।१०।।

## श्री गणपतिसूक्तम्

ॐ आ तू न इंद्र क्षुमतं चित्रं ग्राभं सं गृभाय ।। महाहस्ती दक्षिणेन ।। विद्मा हि त्वा तुविकूर्मिं तुविदेष्णं तुवीमघं ।। तुविमात्रमवोभिः ।। नहि त्वा शूर देवा न मर्तासो दित्सन्तं ।। भीमं न गां वारयंते ।। एतोन्विंद्र स्तवामेशानं वस्वःस्वराजं ।। न राधसा मर्धिषन्नः ।। प्रस्तोषदुप गासिषच्छ्रवत्साम गीयमानं ।। अभि राधसा जुगुरत् ।।१।। आ नोभर दक्षिणेनाभिसव्येन प्र मृश ।। इंद्र मा नो वसोर्निर्भाक् ।। उप क्रमस्वा भर धृषता धृष्णो जनानां अदाशूष्टरस्य वेदः ।। इंद्र यऽउ नु तेऽअस्ति वाजो विप्रेभिः सनित्वः ।। अस्माभिः सु तं सनुहि ।। सद्योजुवस्ते वाजाऽअस्मभ्यं विश्वश्चंन्द्राः।। वशैश्च मक्षू जरन्ते ।।२।।